॥ श्रीयोगीश्वरयाज्ञवल्क्यमङ्गलशासनम् ॥

॥ श्रीगुरुभ्यो नमः ॥

॥ ॐ श्रीमहागणाधिपतये नमः ॥

॥ श्रीमच्चरणवैभवायै नमः ॥

॥ श्रीयोगीश्वर-याज्ञवल्क्य-मङ्गलाशासनम् ॥

ब्रह्मरात-महायोगि-बृहत्-सुकृत-मूर्तये ।
सुनन्दा-सुतरत्नाय सानन्दायास्तु मङ्गलम् ॥ १॥

जननी-जठर-प्राप्त-जलजाक्ष-दयोदयः ।
योऽभूत् परात्मवेत्तास्मै याज्ञवल्क्याय मङ्गलम् ॥ २॥

कृपागुरुर्गुरुर्यस्य ह्यकरोदुपनायनम् ।
वृद्धव्यास-प्रसादात्त-वैदुष्यायास्तु मङ्गलम् ॥ ३॥

वैशम्पायन-प्राप्तादृक्-वृजिनच्छेद-शक्तये ।
वैदेह-वसुधानाथ-वन्दनीयाय मङ्गलम् ॥ ४॥

मैथिलास्थ-नगस्थूणा-मञ्जुपल्लव-कारिणः ।
मन्त्राक्षताः बभुर्यस्य माननीयाय मङ्गलम् ॥ ५॥

वैशम्पायनतोऽधीतं ववाम यजुरुज्ज्वलम् ।
यस्सभायां तपोभाजां योगिवर्याय मङ्गलम् ॥ ६॥

स्वशक्ति-ख्यापनोद्युक्त-सप्तसैन्धवशासनात् ।
आहर्त्रे बडवाश्वानां अर्कशिष्याय मङ्गलम् ॥ ७॥

अयातयाममाम्नायं आम्नायवपुषो हरेः ।
अध्यैष्ट यो मुनिस्तस्मा अक्षय्यं भूरि मङ्गलम् ॥ ८॥

यस्य चित्ररथः शिष्यो योगिनेतुःप्रसादतः।
कात्यायनीप्रियायास्मै कृपासाराय मङ्गलम् ॥ ९॥

मिथिलाधिपदत्ताग्रमाननाय महात्मने ।

आहर्त्रे सौरभेयीनां अध्वरान्तेस्तु मङ्गलम् ॥ १०॥

पितामहमनःपुत्रीपरिणेत्रे पटीयसे ।
शान्तोद्दालकगर्वाय शान्तिसाराय मङ्गलम् ॥ ११॥

दर्भ-स्तम्भ-हृत-ग्रीव-दृप्त-शाकल्य-जीवनम् ।
चकार यः प्रभावेन चित्रचर्याय मङ्गलम् ॥ १२॥

इति माङ्गलिकैः श्लोकैः
उपनदतः कण्वमुख्यसच्छिष्यान् ।
अनुगृह्णन् शुक्लयजुः-
शाखाचार्यो मुनीश्वरो जयति ॥ १३॥

॥ शुभमस्तु ॥